इत्यादिभागुरिवचने प्रागुक्तयुक्त्या मासद्वय एव शक्त्यवधारणान्नानार्थकल्पने गौरवाच्च मासद्वय एव शक्तिर्मासचतुष्टये लक्षणेति ॥

## अथाधिमासनिर्णयः ॥

तत्स्वरूपमाह जोतिःशास्त्रं

5 रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।
तत्र यद्विहितं कर्म उत्तरे मासि कारयेत् ॥

रविणा लङ्घित इत्येकराशिस्थेन सूर्येणातिक्रान्त इत्यर्थः । चान्द्रश्च मासः शुक्लप्रतिपदादिरेवेति प्रागेवोक्तम् । केचित्तु

दर्शाद्दर्शश्चान्द्रः

10 इत्यादिज्योतिःशास्त्रादिवचनेषु कार्यान्वयानुरोधात्, तथा

अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम्

इत्याद्यनेकवचनेषु मलमासलक्षणपरेषु "प्रतिपदमावास्ये रविसंक्रान्तिवर्जिते" इत्यनभिधाय "यत्र मासेऽमावास्याद्वयं रविसंक्रान्तिवर्जितम्" इत्यभिहितत्वा-

[ 1-13. All words from -गुक्तयुक्त्या to इत्यभिहितत्वा- in these lines, lost in DD. ]

1. DC, DD इत्यत्र भागुरिवचनैः. DB पूर्वोक्तयुक्त्या. [ DD has lost a folio containing words from -गुक्तयुक्त्या to चान्द्रमासमध्ये राश्यन्त- (see *infra.*, p. 29, line 14 ) ]. DB -न्नानार्थत्वविकल्पने, DC -न्नानार्थत्वकल्पने ; DE's reading ( -र्थानार्थत्वकल्पने ), though corrupt, seems to follow that of DC. 3. SP, VSP -निरूपणम् for -निर्णयः. 4. SP तत्र for तत्स्वरूपमाह. 5. DA, DE -श्चान्द्रख्यातो. 6. DA inserts इति after कारयेत्. 7. DA, VSP इत्यनेनैक-राशि-. For सूर्येणातिक्रान्त इत्यर्थः DB reads रविणा with a blank space after it. 7-8. DA चान्द्रमासः शुक्ल-. 10. DB, DC -शास्त्रवचनेषु. DB omits कार्यान्वयानुरोधात्. AS कार्यानुरोधात्. DE अथ for तथा. 11. DE omits रविसंक्रान्ति-वर्जितम्. 12. DA इत्याद्यनेकमुनिवचनेषु. 13. SP अमावास्याद्वयं यत्र for यत्र मासेऽमावास्याद्वयं.

चाभिविधिप्रतीतेरमावास्यादिस्तदन्त एव मासो न शुक्लप्रतिपदादिरिति । न च वाच्यम्, दर्शादित्वे मासस्य परदर्शस्य पूर्वमाससमापकत्वेनापरस्य तदादित्वाभावादमासत्वप्रसङ्गः, एवं तदुत्तरस्य दर्शादित्वे तत्समाप्यत्वे च मासत्वेनापरस्य तदादित्वाभावादमासत्वप्रसङ्गे वत्सरे षण्णां मासानां लोपापत्तिः ।

अमावास्याद्वयम्  5

इत्यादेश्चायमर्थः—अमावास्यान्तद्वयं यदि रविसंक्रान्त्या क्रियारूपया वर्जितं तदा मलमासः । तदैवान्तक्षणवर्तिराशिस्थेन रविणा शुल्कप्रतिपदादेर्लङ्घनं भवति । अतो

दर्शाद्दर्शः

इत्यत्रापि नाभिविध्यर्थता । तस्माच्छुक्लप्रतिपदादिरेव चान्द्रो मास इति । एवमन्तिमामावास्यान्ते क्रियोत्पत्तावमावास्याद्वयस्य रविक्रियावर्जितत्वाभावादेकराशिस्थरविणा 10 चान्द्रमासलङ्घनेऽपि मलमासाभावापत्तेः । न चेष्टापत्तिः रविलङ्घितत्वस्याप्येतादृशरविक्रियावर्जितत्वस्यैव विवक्षितत्वादिति ।

अमावास्याद्वयं यत्र

इत्यादिना चान्द्रमासमध्ये राश्यन्तरयोगाभावादेव लङ्घनप्रतीतेः । अन्यथा

[ 1-14. All words from -चाभिविधिप्रतीते– to चान्द्रमासमध्ये राश्यन्तर- in these lines, lost in DD. ]

1. AS शुद्ध- for शुक्ल- . DA omits च. 2. AS परमासदर्शस्य. 3. DB -मासप्रसङ्ग. . AS तत्समाप्ये. 3-4. DE -नापरमासस्य तदादि- . 4. DE असमासत्वे (?) for अमासत्वप्रसङ्गे. DB -प्रसङ्गात्. DA लोपः प्रसजेत्, DC लोपापत्तोः for लोपापत्तिः DB, AS, SP insert अतः after लोपापत्तिः. 6. VSP इत्यस्य for इत्यादेश्च. AS -श्चायमेवार्थः. DB -वास्यान्तक्षणद्वयं. AS यत्र for यदि. DC. -सं[क्रा]न्त्यादिक्रिया-, SP -संक्रान्त्या आदिक्रिया-. 6-7. SP omits 'तदा मलमासः। तदैवान्तक्षणवर्तिराशिस्थेन' and reads instead 'तदा चैकराशिस्थेन'. 7. VSP तदैवान्तःक्षण- AS -राशिस्थितेन. DC संभवति. 9. AS omits अपि. 10. VSP क्रियोपपत्ता-. AS -वास्यान्तद्वयस्य for -वास्याद्वयस्य. SP -भावेनैक-. DE, AS -राशिस्थेन रविणा. 11. SP -भावापत्तिः. DE रविणा लङ्घितत्वस्यापि तादृश-. 12. DE, AS. -वर्जितस्यैव. SP omits इति. 14. DA राश्यन्तरसंयोगा-. SP राश्यन्तरसंयोगाभाव उक्तः for the words from राश्यन्तर- to -प्रतीतेः. DC, DD omit एव.

मासस्य रविलङ्घने पूर्वामावास्यायाः क्रियावर्जितत्वाभिधानानौचित्यात्तस्या मास-
बहिर्भावात्। अतएव

एकराशौ दर्शद्वयातिगः,

तथा

5 मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्

इत्यादावन्तामावास्यायां क्रियायामपि मलमासता प्रतीयते इति। किं च,

पक्षद्वयेऽपि संक्रान्तिर्यदि न स्यात् सितासिते

इत्यनेन सिततुल्यतयासितेऽपि राश्यन्तरयोगरूपफलपरत्वमेव संक्रान्तिपदस्येति।
अतोऽगत्या रौहिणवद्दर्शस्य पूर्वमाससमापकत्वादुत्तरमासारम्भकत्वाच्च द्वयात्मकतैवेति।
10 तच्चिन्त्यम्। एवममावास्यान्तक्षणमृतस्य श्राद्धकर्मणि किं पूर्वमासः किमुत्तरमा-
सोऽङ्गमित्यनध्यवसायापत्तेः। किंच, सार्धसंवत्सरद्वये यदि दर्शान्तक्षणे संक्रमस्तदा पूर्वस्य
परस्य च रविलङ्घितत्वाभावान्न मलिम्लुचतेत्येकस्मादधिमासात्तृतीयेऽब्देऽधि-

1. DE मासस्य परिलङ्घने पूर्वामावास्यायां क्रिया-. SP रविक्रिया- for क्रिया-. 3. DB inserts यदि after एकराशौ. DA, DE दर्शद्वयं यदा. [ St I, p. 770 reads दर्शद्वयातिगः. ] 6. DB इत्यादेः, SP इत्यत्र for इत्यादौ. SP अमावास्यायां for अन्तामावास्यायां. After प्रतीयते इति DE inserts: किं च, एवं मलमासत्वाभावेऽपि परस्य कर्कटादिरविसंक्रान्त्यवच्छिन्नत्वेन द्विराषाढत्वादिप्रसङ्ग इति. 8. DC, DD -फलवत्त्वमेव. DD omits इति. After -पदस्येति DC, SP insert: किंच, एवं ( SP एतस्य for एवं ) मलमासत्वाभावे परस्य (SP -भावेनापरस्य) कर्कटादिरविसंक्रान्त्यवच्छिन्नत्वेन द्विराषा-ढत्वादिप्रसङ्ग इति. 9. DA रोहिण-. DE, AS omit इति. 10. DA omits तत् ( preceding चिन्त्यम् ). DB -क्षणभूतस्य. 10-11. DB किमुत्तरमासः पूर्वमासो वाङ्गमिति, DC, DD, AS किमुत्तरमासः किं पूर्वमासोऽङ्गमिति, SP किमुत्तरमासग्रहणमुत पूर्वस्य ग्रहणमिति for किं पूर्वमासः किमुत्तरमासोऽङ्गमिति. 11. AS inserts यदि दर्शान्तद्वये after -संवत्सरद्वये. DD -क्षणासंक्रम-. 12. DC, DD रविलङ्घनत्वा-. DC, DD म्लुचतेत्यकस्मा.

मासनियमभङ्गप्रसङ्ग इति। तस्मात्

दर्शाद्दर्शः

इत्यादौ मर्यादार्थतैव नाभिविध्यर्थता,

चान्द्रः शुक्लादिदर्शान्तः

इत्यादिप्रमाणबाधाच्च। किंच, एवममावास्यान्तलक्षणस्य द्व्यात्मकत्वे तत्र संक्रान्तौ 5
मलमासं विनापि द्विराषाढादित्वापत्तिरिति। न च

अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम्,

तथा

तस्यार्को दर्शकश्चैकराशौ दर्शद्वयातिगः

इत्यादिवचनविरोधः। एतेषाममूलत्वात्। समूलत्वेऽप्युक्तबाधेनैन्द्राग्नयागाङ्ग- 10
तिथित्वधर्मयोगेनाजहत्स्वार्थलक्षणयामावास्यादिपदानां शुक्लप्रतिपदाद्यमावास्या-

1. SP -मास इति नियम- for -मासनियम-. DC, DD, DE -भङ्गः for -भङ्गप्रसङ्गः. DB, AS, SP omit इति (after -प्रसङ्गः). DA ततश्च for तस्मात्. DB, DE, AS omit तस्मात्. 1-5. VSP omits all words from तस्माद्दर्शाद्दर्शः to इत्यादिप्रमाणबाधाच्च. AS, SP read the sentence beginning with तस्मात् and ending with इत्यादिप्रमाणबाधाच्च after द्विराषाढादित्वापत्तिरिति in line 6. 4. DB चान्द्रशुक्लप्रतिपदादि-, AS चान्द्रशुक्लादि-. 5. DC, DD omit एवम्. VSP अमावास्याद्वयान्त- for अमावास्यान्त-. DB -क्षणाद्यत्वेकत्वे (?) for -क्षणस्य द्व्यात्मकत्वे. 6. VSP द्विराषाढादित्वापत्तेरिति. SP omits इति. 7. DB, DC, DD, AS, SP omit रविसंक्रान्तिवर्जितम्. SP inserts इति after -वर्जितम्. 10. DA समूलत्वेनैन्द्राग्नियागाङ्ग-, DB समूलत्वेऽप्युक्तबाधे चैन्द्राग्नेययागाङ्ग-, DC, DD, SP समूलत्वेऽप्युक्तबाधेनेन्द्राग्नियागाङ्ग-, DE समूलत्वेप्युऽक्तबाधेनैन्द्राग्नीयागाङ्गक-, AS समूलत्वेऽप्युक्तबाधेनैवैन्द्रादियागाङ्ग-, and VSP समूलत्वेऽप्युक्तबाधेनेन्द्राग्नयागाङ्ग-. 11. DA -तिथित्वे धर्म-, DE -तिथिषु धर्म-. DB -योगे वाजहत्स्वार्थ-. [10-11. Raghunandana, who reproduces Śrīnātha's views in these lines almost *verbatim* in his St I, p. 769, reads ऐन्द्राग्नेय- for ऐन्द्राग्न-, अमावास्यापदस्य for अमावास्यादिपदानां, and शुक्लप्रतिपदमावास्या- for शुक्लप्रतिपदाद्यमावास्या-.] DD haplologically omits all words from शुक्लप्रतिपदाद्यमावास्या- to -संचिततिथिभिः on p. 32, line 4. DB, DC DE, AS, SP शुक्लप्रतिपदमावास्या-.

परत्वादिति । अतएव

द्वे ह वै पौर्णमास्यौ द्वे अमावास्ये
तस्मात् प्रतिपद्युपवसन्नेव यजेतापरेद्युः

इति श्रुतिः । एष च द्वेधा भवति—सार्धवर्षद्वयसंचिततिथिभिः शुक्लप्रतिपदादिदर्शान्तैः
5 रविसंक्रान्तिशून्यैरेकः, अपरश्चैकस्मिन्नेवाब्दे माधवादिषट्के एकमधिमासमुत्पाद्य
कार्त्तिकादिषट्के शीघ्रगत्या तिथिह्रासवशादमावास्यायां संक्रम्य क्षयमासं कृत्वा
पुनरुत्तरे मासि मन्दगत्या प्रतिपदि संक्रमणेन चान्द्रमासलङ्घनादिति । तत्र पूर्व एव
कर्मानर्होऽधिमासः, प्रकृतत्वात् ; नोत्तरः, औत्पातिकत्वात् क्रमसंचितत्वाभावाच्च ।
तथा च ज्योतिषं

10 दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः ।
करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः ॥
एवमर्धतृतीयानामब्दानामधिमासकम् ।
ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते तु पश्चिमम् ।

तथा

15 यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः ।
तयैव सर्वसंक्रान्तिर्यावन्मेषं न गच्छति ॥

1. AS, SP -परत्वम् for -परत्वात्. SP, VSP omit इति (after -परत्वात्). SP तथा च for अतएव. 3. DC, AS, VSP omit एव. 4. DC इत्यादिश्रुतिः. DA omits च. DC, VSP द्विधा. SP inserts एव after -दर्शान्तैः. 5. DE omits च (after अपरः). DC -स्मिन्निवाब्दे. 6. After शीघ्रगत्या DA inserts : प्रथमं प्रतिपदि संक्रम्यानन्तरं. AS -वशादमावास्यां. 7. DC, DD, DE, SP संक्रमणे. DE inserts च after संक्रमणेन. DA चान्द्रलङ्घनादिति. DC omits इति. 8. DA reads 'नोत्तरः, औत्पातिकत्वात्' after -भावाच्च. DE औत्पत्तिकत्वात्. 9. DB, SP यथा for तथा. DB, DE, SP omit च after तथा. DC, DD ज्योतिःशास्त्रम्, DE ज्योतिषे for ज्योतिषम्. 10. DC, DD यतः for ततः. [10-13. These four lines are the same as those given in Kauṭilya's Arthaśāstra (ed. R. Shama Sastry), p. 109.] 13. DE पञ्चमाब्दान्ते. DC, DD च for तु. 14. VSP omits तथा.

यदा वक्रातिचाराभ्यां सूर्यसंक्रमणं भवेत् ।
क्षत्रियाणामसृग्धारां तदा पिबति मेदिनी ॥

अस्यार्थः—दिवसस्य तिथेः षष्टिभागं दण्डमेकं सूर्यः प्रतिदिनमाकर्षति । ततश्च ऋतौ मासद्वयात्मके षष्ट्या दिनैः षष्टिनाड्याकर्षात्तिथिरेका सूर्येणाकृष्यते । एवं चन्द्रेणापि । तेन द्वाभ्यां प्रत्यृतु दिनद्वयाकर्षाद्वर्षेण द्वादश दिनानि लभ्यन्ते, तेन 5 सार्धसंवत्सरद्वयेनाधिमासः संपद्यते । एतदेवाह

एवमर्धतृतीयानाम्

इति । अर्धं वत्सरार्धं मासषट्कम्, तदेव तृतीयं येषां तन्मध्य इति शेष इति कश्चित् । वस्तुतस्तु

पश्चाब्दान्ते तु पश्चिमम् 10

इत्युत्तरार्धस्वरसादन्त इति शेषः । ग्रीष्मे माधवादिषट्के पूर्वमधिमासं मेषादित्रिकपतितम्, पश्चाब्दान्ते तु पश्चिमं श्रावणादित्रिकपतितमधिमासं चन्द्राकौं जनयत इत्यर्थः । एतेन माधवादिषट्क एव वर्षोपचेयद्वादशदिनवृद्ध्याधिमासः प्रकृत इत्युक्तम् । अतएव गृह्यपरिशिष्टं

1. SP रवि- for सूर्य- .

2. AS inserts इति after मेदिनी. 3. DE, SP omit च. 4. SP -त्तिथिरेव भवति for -त्तिथिरेका सूर्येणाकृष्यते. SP तथा for एवं. 5. VSP omits द्वाभ्यां. AS दिवस- for दिन- . DA -द्वयकर्षाद्वर्षेण, SP,VSP -द्वयाकर्षेण . DE omits वर्षेण . 6. DB, DC, DD, AS -वर्ष-, DE, SP -वत्सर- for -संवत्सर- . DE, VSP तदेवाह. 7. DB -तृतीयायाम् . 8. VSP संवत्सरार्धं for वत्सरार्धं. SP omits 'वत्सरार्धं मासषट्कम्, तदेव' and reads instead : वर्षस्य . DA omits इति शेषः . 11. DC विशेषः for शेषः . DA पूर्वमधिमासमेषादि-. 11-12. DE, SP, VSP omit मेषादित्रिकपतितं, SP leaving a blank space for it. 12. DE, AS omit तु. DE श्रावणादिपतितत्रिकम्, AS श्रावणादिपतितम् for श्रावणादित्रिकपतितम् . DE चन्द्रार्के जनयते for चन्द्राकौं जनयतः . 13. DB, DC, DD, SP वर्षोपचये द्वादश-, AS वर्षोपचयाद्द्वादश- .

मध्ये विषुवतोर्भानुर्यान्यहानि तु वर्धयेत् ।
तैः संभूयाधिको मासः पतत्येष त्रयोदशः ॥

विषुवतोर्मेषादितुलादिसंक्रान्त्योर्मध्ये । तथा

माधवादिषु षट्केषु मासि दर्शद्वयं यदा ।
5 द्विराषाढः स विज्ञेयः शेते तु श्रावणेऽच्युतः ॥

द्विराषाढ इति द्विराषाढादिरित्यर्थः । अतएव ज्योतिःशास्त्रं

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

तथा विष्णुधर्मोत्तरे ( १. ७२. २१-२३ )

10 सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥
समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ।
स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः ॥

इति । एषा चैकादशदिनवृद्धिस्तिथिह्रासे बोद्धव्येति । एवं

15 मलं वदन्ति कालस्य मासं कालविदोऽधिकम् ।
नेहेतात्र विशेषेज्यामन्यत्रावश्यकाद्विधेः ॥

2. AS पतत्येव. DA, DC, DD, DE, VSP त्रयोदश. [For the reading त्रयोदशः see Kv, p. 115.] 3. DB, SP insert मध्ये before विषुवतो-. DB, SP, VSP -तुला- for -तुलादि-. DC, DD omit -तुलादि-. 4. DB माधवादिषट्कैकमासि, AS माधवादिषट्के मासि, SP माधवादिषु षट्स्वेकमासि for माधवादिषु षट्केषु मासि. 5-8. VSP haplologically omits all words from शेते तु श्रावणेऽच्युतः to स विज्ञेयो. 5. DB च for तु. DB, DE, SP insert इति after श्रावणेऽच्युतः. 6. SP omits इति (after द्विराषाढः). 8. DB, SP, VSP insert इति after कर्कटे. 9. DA तथाहि for तथा. 12. DB वर्षद्वये. 14. DB, VSP omit इति. DB एका for एषा. SP वर्षे for एषा च. AS inserts च after बोद्धव्या.

इति गृह्यपरिशिष्टवचनमपि विष्णुधर्मोत्तरैकवाक्यतया प्रागुक्ताधिमासस्यैव कालमलत्वमाह। तदेतद्वचनस्वरसात् सौरमासा यावन्तो यावता कालेन तावता चान्द्राणामेकाधिक्यमेव दूषकताबीजम्, तच्चैकस्मिन् वर्षे भानुलङ्घितद्वये पूर्वस्यैव संभवति, नोत्तरस्य। तथा हि, त्रिंशता सौरमासैरेकत्रिंशच्चान्द्रमासा यदि भूतास्तदा परतः सौरमासद्वये त्रये वैकश्चान्द्रो मासोऽधिको भवति, तदैव पूर्वस्य नाधिक्यम्, परस्याधिक्यं वाच्यम्। तच्च सर्वथा न संभवतीति पूर्व एव सर्वकर्मानर्हः। एतन्मूलकमेव ५

कार्त्तिकादिषु मासेषु यदि स्यातां मलिम्लुचौ।
सर्वकर्महरः प्रोक्तः पूर्वस्तत्र मलिम्लुचः॥

इति ज्योतिःशास्त्रवचनम्। यत्तु 10

त्रयोदशाख्यं श्रुतिराह मासं
चतुर्दशः क्वापि न दृष्टपूर्वः।
एकत्र मासद्वितयं यदि स्या-
द्वर्षेऽधिकं तत्र परोऽधिमासः॥

1. DC, DD, AS, SP (before correction) प्रागुक्ताधिकमास-. 2. DB तदैतद्वचन-. DB inserts वत्सरे after -स्वरसात्. DA -मासारम्भो for -मासा यावन्तो. DB यावत्कालेन for यावता कालेन. DA, DE तावतां, AS यावतां for तावता. SP inserts कालेन तावतां after तावता. 2-3. DB रविलङ्घितचान्द्रस्यैकाधिक्यत्रय-, DD रविलङ्घितचान्द्रस्याधिक्यं चान्द्राणामेकाधिक्यमेव, SP चान्द्रमासानामेकाधिक्यमेव, VSP रविलङ्घितचान्द्रस्याधिकमेव for चान्द्राणामेकाधिक्यमेव. 3. SP तस्मिन्, VSP तस्यैकस्मिन् for तच्चैकस्मिन्. SP inserts सति after -द्वये. DC, DD संभव एव for संभवति. 4. DE च परतः, SP तत्परतः, VSP परतः for तदा परतः. 5. DB सौरादिमास-. DB, VSP -श्चान्द्रमासो. DA, DE insert यदा after मासः. SP अधिमासो for अधिको. SP तदेव, VSP तत्रैव for तदैव. 5-6. For the words from पूर्वस्य to वाच्यम् VSP reads परस्याधिका वा. DD, DE omit परस्याधिक्यं. 6. DC (after correction), AS omit न (after सर्वथा). DA, DE omit इति (after संभवति). DA कर्मानर्ह इति for सर्वकर्मानर्हः. 8. DA मलिम्लुचे. 9. AS यत्र for यत्त. 13. VSP -द्वर्षेऽधिकस्तत्र परो-.

इति शातातपवचनं तदुक्तरूपाधिमासद्वये परस्य नाधिमासतामाह, असंभवात्। किंतु चान्द्रवैशाखादिमासद्वादशके त्रयोदश चान्द्रमासा एव भवन्ति। यदा तु पूर्वमेकं मासं लङ्घयित्वा मध्ये क्षयमासं कृत्वा पुनरपरं मासं सूर्यो लङ्घयति तदा चतुर्दशः कथमुपपद्यतामित्यत्राह

5 एकत्र मासद्वितयम्

इत्यादि।

परोऽधिमासः

इत्ययमाशयः—पूर्वस्य रविणा लङ्घने उत्तरकार्तिकादिमारभ्य परभानुलङ्घितावधि यावन्तः कार्त्तिकादिचिह्ना मासास्तावन्तो यदि शुक्लप्रतिपदादिदर्शान्ता भवन्ति तदैव 10 तस्याधिक्यं संभवति। तच्च क्षयमासे एकस्मिंश्चान्द्रे चिह्नद्वयसमावेशान्न भवत्येवेति नाधिक्यम्, परस्य तु रविलङ्घितस्योत्तरप्रकृतचैत्रादिकमारभ्य संवत्सरं यावद्यावन्तश्चैत्रादिचिह्ना मासास्तावन्त एव चान्द्राः संभवन्तीति परस्यैवाधिक्यमिति। अतएव

1. SP नाधिमासता for नाधिमासतामाह. 2. DC, DD, DE omit एव. 2-3. DB VSP एकमासं for एकं मासं. 3. DE पुनरपरमासं. AS omits मासं. SP चतुर्द(श)त्वमुत्पद्यता-. 4. AS adds यदा स्यात् after -द्वितयम्. 8. DB रविलङ्घने. DB उत्तरकार्त्तिकादिकमारभ्य, DC, DD, AS उत्तरं कार्त्तिकादिमासमारभ्य, DE, SP उत्तरं कार्त्तिकादिमारभ्य, VSP उत्तरं कार्त्तिकमारभ्य. 9. DA -चिह्नित-मासा-, DB, DE, AS -चिह्नमासा-. DB -दर्शान्तो भवति, SP -दर्शान्तमासा भवन्ति for -दर्शान्ता भवन्ति. DA, DE, SP तदेव for तदैव 10. DB तस्याधिकस्य for तस्याधिक्यं. DA एकस्मिंश्चान्द्रचिह्ने द्वय-, AS एकस्मिंश्चान्द्रचिह्नद्वय-, VSP एकस्मिंश्चान्द्र-द्वय-. AS inserts च after भवत्येव. 11. After नाधिक्यम् DA, DE insert: 'तथा च स्मृतिः —असंक्रान्तमासोऽधिमासः स्फुटः स्याद्द्विसंक्रान्तमास क्षयाख्यः (DA-ख्या) कदाचित्। यत्रैक- (DA त्रैक-, DE यत्रैकत्र for यत्रैक-) वर्षेऽधिमासद्वयं स्यात् क्षयः कार्त्तिकादित्रये नान्यतः (DA -त्रयेणान्यतः) स्यात्॥' DA रविणा लङ्घितस्योत्तर, DB रविलङ्घितोत्तर-. DA प्रकृतचैत्रादिमारभ्य, DC (after correction) -प्रभृति चैत्रादिकमारभ्य, VSP प्रकृतचैत्राधिमासमारभ्य. Before संवत्सरं DB, SP insert परभानुलङ्घित- and DC has (in the margin) परभानुलङ्घितावधि-. 12. DE -चिह्नमा(सा) for -चिह्ना मासा-. DB, AS, SP, VSP omit मासाः. AS omits चान्द्राः. DC, DD omit एव after परस्य.

तमारभ्यैव संवत्सरत्रये आगाम्यधिमासो न तु पूर्वमासमारभ्येति गणनासिद्धमिति। अतएव पूर्वाधिमासात् पूर्वमासमृतस्य त्र्यमासं यावन्माघादिसंज्ञा यावत्यस्तावन्त्येव मासिकानि, तत्परभूताधिमासावधि यावत्यः संज्ञास्ततोऽधिकं मासिकमेक-मित्यन्वयव्यतिरेकाभ्यां परस्यैवाधिक्यं प्रामाणिकमिति। अस्य च चैत्रादिलक्षणा-नाक्रान्तत्वादेवै तन्मासविहितकर्मणामुत्तरमासकर्तव्यतामात्रमनुवदन्ति 5

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः।
तत्र यद्विहितं कर्म उत्तरे मासि कारयेत्॥

इति, तथा

पक्षद्वयेऽपि संक्रान्तिर्यदि न स्यात् सितासिते।
तदा तन्मासविहितमुत्तरे मासि कारयेत्॥ 10

इत्यादिवचनानि। तथा

अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते मासि।
चक्रिणि सुप्ते कुर्यान्नो मङ्गल्यं विवाहं च॥

इति भीमपराक्रमादधिमासभानुलङ्घितयोर्भेदेनोपादानमप्येतद्विषयमेव। अस्मादेव

1. SP omits एव after तमारभ्य. DD नोत्तर- for न तु पूर्व-. DA, AS पूर्वमारभ्येति. DC, DD गणनाऽसिद्धमिति. 2-4. DE omits all words from अतएव to प्रामाणिकमिति. 2. AS पूर्वमास्यतस्य (?) for पूर्वमासमृतस्य. AS inserts तु after -संज्ञाः. DC, DD -संज्ञामारभ्य यावत्य-. 3. DA -भूतावधि, AS -भूतानि मासावधि तु for -भूताधिमासावधि. DB, AS omit एकम्. 4. VSP omits इति (after एकम् in line 3). AS inserts इति after आधिक्यम्. 4-5. DC, DD, DE, AS, VSP -लक्षणानतिक्रान्त-. 5. DE -विहितमुत्तरे मासि कर्तव्यता-. DA कर्तव्यता-मुत्तरम् for the phrase उत्तरमास etc. DB, VSP अनुवदति. 6. DA -श्चान्द्रख्यातो. 7. DA कार्यं for कर्म. 8. DB, DE omit इति. SP omits तथा. 10. DA -विहित उत्तरे. 12. DA चानु- for भानु-. DB मासे for मासि. 13. DB हरौ for चक्रिणि. VSP न for नो. DB, SP माङ्गल्यं. 14. DC, DD, DE, AS, VSP इत्यादि for इति. SP -पराक्रमादात्रधिमास-. SP एतद्विषयः for एतद्विषयम्. DB, DC इति for एव (after एतद्विषयम्). SP तस्मात् for अस्मात्.

वचनादधिमासाद्भानुलङ्घितस्य भेदावगमान्माधवादिषट्कपतित एव मासः प्रकृतत्वान्मलमासः, न तु कार्त्तिकादिषट्कपतितः, क्रमसंचितस्यापि तस्यौत्पातिकत्वादिति सकलगौडनिबन्धारः। वस्तुतस्तु दूषकताहेतोस्तत्रापि संभवादौत्पातिकत्वं नात्र प्रयोजकं किंतु राजानिष्टादिजनकमेव। अतएव

5 क्षत्रियाणामसृग्धाराम

इत्यादि तत्रैवोक्तम्। शुभफलकत्वमपि

लोकस्य फाल्गुने हृष्टी राज्ञो विजयमादिशेत्

इति। तस्यापि व्यवहाराङ्गता प्रतीयत इति पाश्चात्यादिसंमतो न्याय्यः पक्ष इति। अत्र च मलिम्लुचे आषाढादिशब्दो गौणः, द्वादशे मासि मलमासपाते आषाढादि-
10 मृतानां सपिण्डीकरणप्राप्त्यर्थः।

मेषगरविसंक्रान्तिः शशिमासे भवति यत्र तच्चैत्रम्।
एवं वैशाखाद्या वृषादिसंक्रान्तियोगेन॥

1. VSP omits अधिमासात्. DC, DD अधिमासभानुलङ्घितयोः, SP अधिमासे भानुलङ्घितस्य for अधिमासाद्भानुलङ्घितस्य. DA, DE -षट्पतित एव, DC, DD षट्सु पतित एव, VSP -षट्क एव. DB, VSP मास-, DC अधिमासः, DE मलमासः, SP संक्रान्तोऽधिमासो मासः (संक्रान्तोऽधिमासो being written in the margin) for मासः. 2. DE omits मलमासः. DB, AS, SP, VSP omit तु. DE -षट्- for -षट्क-. DA क्रमसिद्धं च तस्यापि. 2-5. DD haplologically omits all words from -मसंचितस्यापि to क्षत्रियाणामसृ-. 3. DC, VSP -निबन्धकारः. DA omits अपि. DB औत्पातिकं, DE औत्पादिकत्वं for औत्पातिकत्वं. 4. DB राजानिष्टजनकत्वमेव. 5. After असृग्धाराम् AS adds 'तदा पिबति मेदिनी'. 6. DB, DC शुभफलजनकत्वमपि. SP इत्यादि for अपि. 7. DD हृष्ट, AS हृष्णी, SP हृष्णा for हृष्टी. SP राज्ञी विजय-. 8. DB पाश्चात्यादिसंगतोऽप्ययं पक्षो न्याय्यः, AS पाश्चात्यादिपक्षो न्याय्यः for पाश्चात्यादिसंमतो न्याय्यः पक्षः. DA न्यायः for न्याय्यः. DB omits इति. 9ff. VSP omits all words from अत्र च मलिम्लुचे to न तु मासत्वमिति (see *infra.*, p. 39, line 6). 9. DB mits च. DE द्वादशमासि. AS transposes भवति and यत्र. SP यच्च for यत्र

इति ब्रह्मगुप्तकृताषाढादिलक्षणायोगात्। अतएव

सा वैशाखस्यामावास्या भवति या रोहिण्या संबध्यते

इति श्रुत्या वृषार्कसमाप्यत्वेन वैशाखत्वमुक्तम्। तथा

एवं षष्टिदिनो मासस्तदर्धं तु मलिम्लुचः

इत्यादिना षष्टिदिनात्मकस्य मासत्वम्, मकरस्थरव्यारब्धत्वेनोपाधिना तथा मलिम्लुच- 5
स्यार्धमासत्वमुक्तम्, न तु मासत्वमिति। केचित्तु मीनस्थरव्यारब्धशुक्लप्रतिपदादि-
दर्शान्तश्चान्द्रश्चैत्र इति चैत्रलक्षणम्, एवं वैशाखादीनामपीत्यभिधाय मलमासेऽपि
वैशाखादिपदानां मुख्यत्वमित्याहुः। तच्चिन्त्यम्। एवमुत्तरषट्के शुक्लप्रतिपदि
तुलायां संचर्य शीघ्रगत्यामावास्यायां वृश्चिकसंक्रान्तौ पूर्वप्रतिपदः कन्यास्थ-
रव्यारब्धत्वेन परप्रतिपदश्च वृश्चिकस्थरव्यारब्धत्वेन तुलास्थरव्यारब्धचान्द्रमासाभावे 10
तदब्दे कार्तिकलोपापत्तेः। अस्मन्मते तूभयसंक्रान्त्यवच्छिन्नत्वेनोभयमासत्वादेकस्य
न कार्त्तिकलोप इति। किंच, पूर्वसंक्रान्तौ पूर्वमासे प्रतिपदाद्यक्षणे चान्त्यसंक्रमणे

1. DA -कृताषाढलक्षणायोगात्, DB -कृताषाढादिनक्षत्रयोगात्. 1-6. DA, DE omit all words from अतएव to न तु मासत्वमिति. 2. AS omits भवति. 3. DB omits तथा. 4. DC, DD षष्टिदिने यो for षष्टिदिनो. AS च for तु. 5. DD -नोपधिना. 5-6. AS omits all words from तथा मलिम्लुचस्य to मासत्वमिति and reads instead : तथा मलिम्लुचत्वे मासतोक्ता, न हि ( ? very indistinct) निमित्तमासत्वमिति. 9. DC, DD, DE, AS, SP मीनस्थरविप्रारब्ध- . 7. SP, VSP -श्चान्द्रचैत्र इति. DA omits all words from वैशाखादीनाम् to मलमासेऽपि. DB omits अपि after वैशाखादीनाम्. 8. AS omits वैशाखादिपदानां. DB, AS insert अपि after एवम्. DA एवमुत्तरषाट्कशुक्ल-, DE एवमुत्तरषार्धशुक्ल- ( ? ). 8-9. DA, DB, DC, DD -प्रतिपदादितुलायां. 9. DB, DC, DD संचार्य. 12. SP inserts च after पूर्वप्रतिपदः. 9-10. For the words from कन्यास्थरव्यारब्धत्वेन to तुलास्थरव्यारब्धचान्द्रमासाभावे DB reads कन्यास्थरव्यारब्धश्चान्द्रमासाभावे. 10. DE, VSP परः प्रति- . AS, VSP omit च after -प्रतिपदः. 11. DA तदाब्दकार्तिक-, SP तदा चेत् कार्त्तिक- for तदब्दे कार्त्तिक- . DA -संक्रान्त्यवाचित्वेनोभय- . DA एवास्य for एकस्य. 12. VSP omits न. DB, AS omit इति. DE, VSP omit all words from किं च to यत्किंचिदेतत् ( on p. 40, line 2 ).DA omits च before अन्त्यसंक्रमणे. AS चान्यसंक्रमे, SP चान्त्यसंक्रमे for चान्त्यसंक्रमणे.

मलमासे उत्तरस्य पूर्वराशिस्थरव्यारब्धत्वेन तत्र प्रकृतमासत्वाभाव एवापद्येतेति यत्किंचिदेतत्। अत्र च मलमासे विशेषोऽस्मत्कृतविवेकार्णवेऽनुसंधेयः।

अस्मिंश्चाधिमासे संभवत्कालान्तरं कर्म न कर्तव्यम्,

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः।
5 तत्र यद्विहितं कर्म उत्तरे मासि कारयेत्॥
मलं वदन्ति कालस्य मासं कालविदोऽधिकम्।
नेहेतात्र विशेषेज्यामन्यत्रावश्यकाद्विधेः॥

इति गृह्यपरिशिष्टवचनात्।

उत्तरे मासि कारयेत्

10 इत्यस्यायमाशयः— वैशाखाद्युल्लेखेन यद्विहितं कर्म तत् पूर्वस्य मलमासत्वेन तत्र न कार्यम्, किंतूत्तरत्रैव, तस्यैव प्रकृतवैशाखादित्वात्। यत्त्वमावास्याश्राद्धं प्रेतमासिकश्राद्धादि च मासि मासि विहितं तन्मलमासेऽपि कर्तव्यम्, पूर्वमासस्योत्तरत्रालाभात्। एतदेवाह

अन्यत्रावश्यकाद्विधेः

1. DA (before correction) मलमासान्, DC, DD परमासे for मलमासे. DB, DC (before correction), DD -रव्यनारब्धत्वेन. DB प्रकृते मासत्वा- . DA, AS omit एव. DB प्रतिपद्यते for आपद्येत. 2. DE यत्र for अत्र. DA मलमासविशेषो- . DA, DE, SP insert इति after अनुसंधेयः. 3. VSP inserts इति after कर्तव्यम्. 5. DA श्राद्धं for कर्म. 8. DD omits गृह्य- . 10. VSP अर्थः for आशयः. DE omits तत्. DB omits तत्र न. 11. DB, DE, AS कर्तव्यं for कार्यम्. DA, DB, VSP -वैशाखत्वादिति. 11-12. AS प्रेतमासिकादि. 12. DB कार्यम् for कर्तव्यम्. 12-13. DA पूर्वामावास्याया उत्तरत्रालाभात्, DB पूर्वपूर्वमासस्योत्तरोत्तरालाभात्. 13. DB एतदेवेत्याह, VSP तदेवाह for एतदेवाह.

इति। तथा

नित्यनैमित्तिके कुर्यात् प्रयतः सन् मलिम्लुचे।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च॥

इति। अत्र नित्यमहरहः क्रियमाणं संध्यापञ्चमहायज्ञादि। नैमित्तिकं ग्रहणश्राद्धादि। तीर्थस्नानमावृत्तम्, 5

मलमासेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत्

इति स्मृतेः। गजच्छाया च न ब्रह्मपुराणोक्ता, अधिमासे कृष्णत्रयोदश्याः सपाद-त्रयोविंशतिदिनपातासंभवेन हस्तानक्षत्रस्थसूर्याभावात्; गजच्छायाख्यदेशपरा अमा-वास्यापराह्णपरा वा,

वनस्पतिगते सोमे छाया या प्राङ्मुखी भवेत्। 10
गजच्छायेति सा प्रोक्ता पितॄणां दत्तमक्षयम्॥

1. After इति DB, DC, DD, AS, SP, VSP insert: अतएव 'तदा त्रयोदशे (AS -दशं, SP -दशे मासि) श्राद्धं कार्यं तदधिकं भवेत्', तथा, 'शाकेनाप्यपरपक्षं (VSP -पक्षश्राद्धं) नातिक्रामेत् (DD repeats शाकेनाप्यपरपक्षं नातिक्रामेत्)। मासि मासि वोऽशनमिति (DB -मित्यादि) श्रुतेः' (गोभिलपरिशिष्ट, श्राद्धकल्प, ४ १२-१३) इत्यादि। 4. DA omits इति. DB, DC, AS, SP, VSP तत्र for अत्र. SP श्राद्धं for क्रियमाणं. 5. DB तीर्थस्नानममावृत्तम्, DC तीर्थश्राद्धमनावृत्तम्, DD, VSP तीर्थस्नान-मनावृत्तम्. 6. DB, DC -श्राद्ध- for -स्नान-. 7. DE इत्यादिस्मृतेः. DA omits न. SP मघायुक्त- for कृष्ण-. 8. DE -संभवे हस्ता-. DA, AS हस्त- for हस्ता-. AS inserts किंतु before गजच्छाया-. DE, DA कुञ्जरच्छायामुख्य-, DE, VSP कुञ्जरच्छायाख्य- for गजच्छायाख्य-. DA, DB, DE, VSP -देशपरम्, DC, DD, AS, SP -देशरूपा for -देशपरा. 9. DA, DE -पराह्णपरं, DC (after correction from -परारूपा) -पराह्णे, DD, AS, SP -पराह्णरूपा, VSP -पराह्णं for -पराह्णपरा. DA omits वा. 10. SP has the alternative reading सूर्ये for सोमे in the margin. 11. DE तु for इति.

इति भविष्यपुराणोक्तवचनात्। तथा गृह्यपरिशिष्टम्

अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः।
मङ्गल्यमभिषेकं च मलमासे विवर्जयेत्॥

5 'यज्ञदानव्रतानि च' इत्यत्रापि यद्यपि व्रतमात्रं निषिद्धं तथापि यद्व्रतं माघाद्युल्लेखेन विहितं तत्परमेव। उक्तन्यायमूलत्वे लाघवात्। यत्तु न माघाद्युल्लेखेन विहितं

1. DA omits इति. DB, DC, DD, AS, SP, VSP -पुराणवचनात्. DE यथा for तथा. DB inserts च after तथा. AS, SP ज्योतिःपराशरः for गृह्यपरिशिष्टम्. [ 2-4. The three lines अग्न्याधेयं प्रतिष्ठां च etc. are ascribed to Parāśara in Sp, fol. 55a, and to Jyotiḥ-parāśara in Kv, pp. 129-130, St I, p. 817 and II, pp. 342 and 343, and Śd-k, p. 283, and so on. ] 3. DB, DC, DD, SP देवव्रत- for वेदव्रत-. [ Though better Ms evidence is in favour of the reading वेदव्रत-, the reading देवव्रत- seems to be the generally accepted one ; because this latter reading is found in Kv, p. 128, Sp, fol. 55a, Śd-k, p. 283, St I, p. 817 and II, pp. 342 and 343, and so on. In his St II, p. 343 Raghunandana explains the word देवव्रतवृषोत्सर्गः as 'देवमुद्दिश्य व्रतरूपवृषोत्सर्गो देवव्रतवृषोत्सर्गः'. In the Garuḍa-purāṇa, where the three lines अग्न्याधेयं etc. occur, the reading देवव्रत- is found in the Vaṅga. and Jīvānanda Vidyāsāgara's editions ( see Garuḍa-p. I. 128. 12 ) but in the Veṅkaṭ. edition (I. 128.13-14) the reading वेदव्रत occurs. For the reading वेदव्रत- see also Śv, p. 197, where these lines have been ascribed to Jyotiḥ-parāśara. ] 4. DB. DC, DD माङ्गल्य-. 5ff. DA, DE, VSP omit all words from यज्ञदानव्रतानि च to इति (on p. 43, line 11) here but insert them after चिन्त्यमेवेति (on p. 50, line 3) with the following differences in readings :—VSP omits अपि after इत्यत्र (line 5) ; VSP तन्मात्रं for व्रतमात्रं (line 5) ; DE (in the margin), VSP insert न after माघाद्युल्लेखेन (line 5) ; DA माघाद्युद्दिश्य न विहितं, DE माघाद्युल्लेखमभिहितं तत्परमेव उक्तं for न माघाद्युल्लेखेन विहितं (line 6) ; DA, DE, VSP omit यत् क्रियते (p. 43, line 1) ; DE -मासपातेऽपि for -मासेऽपि (p. 43, line 1) ; DA, DE, VSP omit -व्रता- (p. 43, line 2) ; DA किंच for किंतु (p. 43, line 4) ; VSP हरिः for शिवः (p. 43 line 4) ; DE omits इति (p. 43, line 5) ; DA उक्तं च, VSP उक्तं for तदुक्तं (p. 43, line 6) ; DA omits -गृहप्रतिष्ठा- (p. 43, line 9). 5-6. DB मासाद्युल्लेखविहितं, AS मासाद्युल्लेखेन विहितं. 6. SP inserts तदेव after विहितं.

किंतु प्रतिमासमेव यत् क्रियते तन्मलमासेऽपि कर्तव्यमेव। निरवकाशत्वात्। अतएव रम्भातृतीयाव्रताधिकारे शिवरहस्यं

मासे मालम्लुचेऽप्येवं यजेद्देवीं सशङ्कराम्।
किंतु नोद्यापनं कार्यमित्याह भगवाञ्छिवः॥

इति। उद्यापनं प्रतिष्ठा। एतादृशस्यापि व्रतस्यारम्भो मलमासे न कर्तव्यः। 5
तदुक्तं कश्यपेन

ऋक्षैकमन्दिरगतौ यदि जीवभानू
शुक्रोऽस्तगः सुरवरैकगुरुश्च सिंहे।
नारभ्यते व्रतविवाहगृहप्रतिष्ठा
चौरादिकर्म गमनागमनं च धीरैः॥ 10

इति। अत्र वृषोत्सर्गादीनां शृङ्ग्राहिकया निषेधादशौचान्तद्वितीयदिनविहितमपि वृषोत्सर्गं मलमासे न कुर्यात्, अविशेषात्। कश्चित्तु

एकादशाहे षण्मासे त्रिपक्षे चाब्दिके तथा।
वृषोत्सर्गं प्रकुर्वीत परस्तादुक्तकालिकम्॥

इति सत्यव्रतवचनात् सपिण्डीकरणानन्तरं क्रियमाणे वृषोत्सर्ग एव कालशुद्धिचिन्ता, 15

1. DC, DD omit यत् क्रियते. AS तत् क्रियते for यत् क्रियते. SP has यत् क्रियते in the margin. AS, SP निरवकाशात्. 2. DC, DD -व्रताधिकारेऽपि शिवरहस्ये. 3. DC मासि for मासे. 5. DB omits अपि. AS omits व्रतस्य. DB कार्यः for कर्तव्यः. 6. AS कश्यपेन. 7. DC -गतो for -गतौ. 9. DD -ग्रह- for -गृह-. 11. AS, SP omit इति. After इति DC, DD insert : 'एकर्क्षमेकमन्दिरमिति प्रत्येकमपि संबध्यते। गमनागमनं तीर्थयात्रामित्यर्थः'. SP (after correction) अथ for अत्र. DB, DE, AS, SP, VSP insert च after अत्र. DB, DC, DD, AS, SP, VSP शृङ्ग्राहिकतया. 11-12. DA -विहितवृषोत्सर्गं. 13. VSP षाण्मासिके त्रि-. 14. VSP पुरस्तात् for परस्तात्. 15. DB सपिण्डीकरणोत्तरक्रियमाण-, DC, DD सपिण्डीकरणोत्तरक्रियमाणे, AS, SP सपिण्डीकरणोत्तरं क्रियमाणे. AS तु for एव. AS कालाशुद्धि-.

एकादशादिविहितस्तु मलमासादावपि कार्य इत्याह । तन्न ।

परस्तादुक्तकालिकम

इत्यस्य

कार्त्तिक्यामयने चैव पौष्ण आश्वयुजस्य च

5 इत्यादिगृह्योक्तकालमादायाप्युपपत्तौ सामान्यतः प्राप्तं वृषोत्सर्गमात्रमनूद्य मलमासे निषेधविधेर्बाधायोगात्, सपिण्डीकरणोत्तरस्येव तत्पूर्वस्यापि वृषोत्सर्गस्य सावकाशत्वेन

अन्यत्रावश्यकाद्विधेः

तथा

कुर्यान्न सावकाशं मङ्गल्यम्

10 इत्यादिविधिबाधायोगाच्चेति । एवं निरवकाशमपि चूडाकरणादि मलमासे न कार्यम् । अतएव भीमपराक्रमे

अधिमासके विवाहं यात्रां चूडां तथोपनयनादि ।
कुर्यान्न सावकाशं मङ्गल्यं न तु विशेषेज्याम् ॥

1. DE एकादशादिविहितस्तु मलमासेऽपि कार्य- . 2-3. For परस्तादुक्तकालिकम् इत्यस्य VSP reads पुरस्तादुक्तकालिकश्च . 3. DB, DC, DD, SP insert षण्मासाद्य- (SP षाण्मासिकाद्य-) तिरिक्तकालपरत्वेनावश्यसंकोचस्य (DC, DD -परत्वेनावश्यकसंकोचस्य ) after इत्यस्य . 4. DA पौषम्, DC, DD पौष्याम् for पौष्ण- . 5. DB, AS वृषोत्सर्गमनूद्य . 5-6. DB मलमासनिषेध- . 6. DE -विधिबाधा- . VSP सपिण्डीकरणस्योत्तरस्येव . DB, AS, SP एव for इव . 7. DC, DD अन्यत्रावश्यकविधेः . 9. DC, DD insert न after सावकाशं . DB, VSP माङ्गल्यम् . After मङ्गल्यम् DA adds न तु विशेषेज्याम्, DE ते विशेष इज्या (?) and VSP न च विशेषेज्याम् . 10. DE इत्यादिविधेर्बाधा-, SP इत्यादेर्बाधा- . AS -बाधापत्तेश्चेति . VSP निरवकाशे for मलमासे . 11. AS inserts इति after कार्यम् . 12. SP अधिमासे वि- . DB, VSP omit चूडां . 13. DB, SP insert न before कुर्यान्न . AS insert न after सावकाशं . VSP माङ्गल्यं .

इति । अत्र सावकाशं न कुर्यादित्युक्त्वापि विवाहादीनां यदुपादानं तन्निरवकाश-तत्तत्कर्मणामपि निषेधार्थमिति । तथा ऋष्यशृङ्गः

अवषट्कारहोमश्च पर्व चाग्रयणं तथा ।
मलमासेऽपि कर्तव्यं काम्या इष्टीर्विवर्जयेत् ॥

अवषट्कारहोमः सायंप्रातर्होमः । पर्व पर्वविहितं दर्शपौर्णमासौ पिण्डपितृयज्ञः पार्वण- 5
श्राद्धं च । अत्र केचित्

सपिण्डीकरणादूर्ध्वं यत्किंचिच्छ्राद्धिकं भवेत् ।
इष्टं वाप्यथवा पूर्तं तन्न कुर्यान्मलिम्लुचे ॥

इति लघुहारीतवचने,—श्राद्धमेव श्राद्धिकम्, स्वार्थे ठक्, यत्किंचिदित्यनेन सामान्य-
प्रतीतेः,—श्राद्धमात्रस्य मलमासे निषेधादमावास्याश्राद्धं मलमासे न कुर्यादित्याहुः । 10
तच्चिन्त्यम् । सामान्यवचनस्य

1. DA, VSP इत्यादि for इति (before अत्र). SP पुनः for अपि. 1-2. DC, DD तन्निरवकाशं तत्तत्-. 2. SP omits इति. After निषेधार्थमिति SP inserts : तथा अग्न्याधेयमित्यादिज्योतिःपराशरवचनेऽभ्युदयं चूडादिरूपतया विवेचितमिति. DE inserts च after ऋष्यशृङ्गः. 3. DC, DD तु for च. 4. DB काम्याह परिवर्जयेत्. 5. VSP inserts च after अवषट्कारहोमः. SP omits पर्व before पर्वविहितं. DC, DD, AS -पौर्णमास्यौ for -पौर्णमासौ. 5-6. VSP omits पार्वणश्राद्धं च. 8. DA पूर्णं for पूर्तं. AS inserts न after कुर्यात्. 9. DD omits लघु. DB -वचनात् for -वचने. DB inserts इति after श्राद्धिकम्. DB इकन् for ठक्. DC, DD, DE, AS, SP, VSP साकल्य- for सामान्य-. 10. The syllables न कुर्या of न कुर्यादित्याहुः, lost in DA. DC, DD, AS, SP कार्यम् for कुर्यात्. 11. DC, DD -वचनात् for -वचनस्य.

अन्यत्रावश्यकाद्विधेः,
पर्व चाग्रयणं तथा

इत्यादिवचनेन बलीयसा बाधात्, अन्यथा नित्यनैमित्तिकश्राद्धानामपि बाधापत्तेरिति। न च

5 नित्यमेकं हि सर्वदा

इति प्रतिप्रसवे एकपदान्नित्यनैमित्तिकाख्यदर्शश्राद्धव्युदास इति वाच्यम्। तस्य सावकाशनित्यनैमित्तिकानामश्वयुक्कृष्णपक्षश्राद्धादीनां व्युदासकत्वेऽपि सार्थकत्वादिति। आग्रयणं नवशस्येष्टिः। तथा हारीतः

गर्भे वार्द्धुषिकृत्ये च मृतानां पिण्डकर्मसु।
10 सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः॥

गर्भे गर्भकृत्ये पुंसवनसीमन्तोन्नयनादौ। वार्द्धुषिकृत्ये वैश्यानां

3. SP इति for इत्यादि-. DA इत्यादिविशेषवचनेन. DB बाधितत्वात् for बाधात्. 6. DE omits तस्य. 7. DA (before correction) -पक्षे श्राद्धादीनां, DC, DD -पक्षीयश्राद्धादीनां. AS व्युदासकत्वेन for व्युदासकत्वे. DC, DD, AS, VSP omit अपि (after व्युदासकत्वे). 8. DC omits इति. AS omits तथा. 9. SP पितृ- for पिण्ड-.

गोभिलोक्ते। यत्तु

1. DB, VSP गोभिलोक्तैः. After गोभिलोक्ते DC, DD, SP, VSP (with crosssigns at both ends of the passage in VSP) insert: "सपिण्डीकरणे चाधिमासदोषो नास्तीत्यर्थः (VSP omits all words from सपिण्डीकरणे to नास्तीत्यर्थः)। इत्थं च (SP places इत्थं च before सपिण्डीकरणे)

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया द्विजैः।

क्वचित्त्रयोदशेऽपि स्यादाद्यं (DC, DD -द्य- for -द्यं) मुक्त्वा तु वत्सरम्॥

इति हारीतवचनमन्त्या- (DC, DD, VSP -न्ता- for -न्त्या-) धिमासविषयक- (DC, DD, VSP omit -क-) मेवेति। अत्र चायं (SP omits च) न्यायः—अन्त्या- (DC, DD, VSP -न्ता- for -न्त्या-) धिमासे एकनामत्वं (DC, DD -मासत्वं for -नामत्वं) मासद्वयस्य न मुख्यं (DC, DD मुख्यत्वं for मुख्यं) किंतु माघादिविहितसपिण्डीकरणादिकर्मप्राप्त्यर्थं गौणमेव, ततश्च निरूढलाक्षणिकतत्तन्मलमास- (DC, DD, VSP -तत्तन्मास-) मादाय क्वचित् (DC, DD, VSP omit क्वचित्)

द्वादश मासाः संवत्सरः

इति श्रुतिबोधितसंवत्सरस्वरूपनिर्वाहे तत्रैव

पूर्णे संवत्सरे

इत्यादिना सपिण्डीकरणविधिः, नोत्तर इति। अतएव

संवत्सरातिरेको व मासश्चैव (VSP मासो यः स्यात् for मासश्चैव)

त्रयोदशः (SP, VSP -दश for -दशः)।

तस्मात्त्रयोदशं (VSP -दशे for -दशं) श्राद्धं न कुर्यान्नोपतिष्ठते॥

इति ऋष्यश्रृङ्गवचने त्रयोदशस्य संवत्सरातिरिक्तत्वं हेतुतयोपन्यस्य पूर्वस्य (VSP omits पूर्वस्य) मलमासस्यैव संवत्सरनिर्वाहकतया तत्रैव त्रयोदशं निषिध्य संवत्सरविहितसपिण्डीकरणमुक्तम्। एवं पञ्चदशश्राद्धमात्राधि- (VSP -श्राद्धाधि- for -श्राद्धमात्राधि) कारिणामपि

मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्

इत्यादिना त्रयोदशस्य वत्सर-(VSP omits वत्सर-) बहिर्भावात् [SP, before correction,—पञ्चदशश्राद्धमात्राधिकारिणा मासिकश्राद्धं कर्तव्यं प्रतिमासं तु वत्सरमित्यादिना त्रयोदशस्य संवत्सर-बहिर्भावात् for the words from पञ्चदशश्राद्धमात्राधिकारिणामपि to वत्सरबहिर्भावात्; it has also in the margin the alternative reading '(पञ्चदशश्राद्धमात्राधिकारिणा) -मपि मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सर इति बहिर्भावात्' for the above mentioned words] न तदवधि मासिक- (DC, DD त्वधिमासिक-, VSP तदधिमासिक- for तदवधि मासिक-) मित्युक्तम्। मध्याधिमासे तु नास्य न्याय- (DD न्याय्य-) स्यावसर इति। तत्र द्वादशे मृताहाप्राप्ते (SP मृताहप्राप्तेः, VSP मृताहाप्राप्तेः) त्रयोदश एव मासे सपिण्डीकरणादि-कमिति। अतएव सत्यव्रतः

अधिमासो न कर्तव्यः श्राद्धे सांवत्सरादिके।

तथा

वर्षे वर्षे च यच्छ्राद्धं मातापित्रोर्मृताहनि।
मलमासेऽपि कर्तव्यं व्याघ्रस्य वचनं यथा॥

संवत्सरस्य मध्ये तु यदि स्यादधिमासकः।
तदा त्रयोदशे मासि क्रिया प्रेतस्य वार्षिकी॥

इत्याह (SP inserts इति मध्ये and VSP मध्ये before इत्याह)। केचित्तु एवमुत्तरेऽप्यधिमासे (DD, SP, VSP एवमादावपीत्याद्यधिमासे for एवमुत्तरे etc.; DC, VSP insert अपि after -प्यधिमासे) त्रयोदशे सपिण्डीकरणमाहुः। तच्चिन्त्यम्। न च (DC, DD, VSP omit न च; SP has न च in the margin) मलमासस्य प्रागुक्तन्यायेन कार्त्तिकादिपदावाच्य- (DC -पदवाच्य-) त्वात्तत्र मृतस्य श्राद्धे कार्त्तिकादेरनङ्गत्वात् सौरादरेणैव (DC, DD omit एव) कर्तव्यतया त्रयोदशे मृताहाप्राप्तेर्न श्राद्धं किंतु द्वादश एव, सौरेणैव (DC, DD, VSP च for एव) सौरादरे कदाचिन्मृततिथ्यप्राप्त्या श्राद्धलोपाद्वरं चान्द्रस्यैव तुलास्थरव्यारब्धत्वादिरूपगुण- (DC, DD -त्वादिकगुण-) योगाद् गौणस्याङ्गत्वमिति वाच्यम्। एवमपि मलमासमृतस्य वर्षान्तरे क्षयमासे तुलास्थरव्यारब्धादेरप्राप्तौ श्राद्धलोपतादरः स्यात्, तदा च तुलास्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तमासत्वं (DC, DD, VSP insert गुरुं after -मासत्वं) विहाय तुलास्थरव्यवच्छिन्नकालस्यैव लघोरङ्गत्वकल्पनेति।

अतएव

मलमासे तु संप्राप्ते ब्राह्मणो म्रियते यदि।
ऊनाभिधेयो मासोऽसौ कथं कुर्वन्ति याज्ञिकाः॥
यस्मिन् राशिगते भानौ विपत्तिः स्याद्द्विजन्मनाम्।
तेषां तत्रैव कर्तव्या पिण्डदानोदकक्रिया॥

तथा माधवीयसंग्रहे

वर्षे वर्षे तु यच्छाद्धं मृताहे (DC युताहे for मृताहे) तन्मलिम्लुचे।
कुर्यात्तत्र (DC, DD, VSP तु तत् for तत्र) प्रमीतानामन्यथा (DC, DD अन्यत्र for अन्यथा) तु न तद्भवेत्॥

इति सत्यतपो- (SP सत्यव्रत- for सत्यतपो-) वचनमिति। एतावता ब्रह्मगुप्तोक्तमेव माघादिपद-प्रवृत्तिनिमित्तमित्यपि स्फुटीचकारेति (DC, DD insert आहुः after -चकारेति)"।

1. DB, SP, VSP संवत्सरादिके, AS सांवत्सराब्दिके. 3. DD, DE, SP, VSP तु for च. 4. DB व्यासस्य for व्याघ्रस्य.

इत्यादि पठन्ति तदमूलमेव। समूलत्वेऽपि यदाशौचपतितं सांवत्सरिकश्राद्धमशौचान्ते मलमासे कर्तव्यतया पतति तदा मलमासेऽपि कार्यमित्येवंपरम्। अतएव ऋष्यशृङ्गः

शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तस्य कर्तव्या न त्वन्या वै कदाचन॥ 5

इति। मलमासपातेऽपि नान्येत्युक्तम्, अन्यथा वैयर्थ्यात्। न च बाधकासत्त्वे सति नान्येत्येव तस्यार्थः, अन्यथाऽशौचान्ते द्रव्याद्यसंपत्तिरूपविघ्ने पक्षिण्यशौचान्ते च रात्रावपि श्राद्धप्रसङ्गो लोपो वापद्येतेति वाच्यम्। विघ्ने कर्मनिर्वाहस्य सर्वथैवासंभवाद्रात्रौ च निषिद्धत्वादन्यत्रानुष्ठानस्यौचित्यात्, मलमासपाते तूत्तरे मासि शुद्धिप्रथमदिनरूपकालस्यासंभवेन निरवकाशतया प्रतिप्रसवविषयतयाकरणे 10 दोषाभावात्,

न त्वन्या वै कदाचन

1. VSP पठति. DB यदाशौचान्तपतितं. SP inserts तत् after -पतितं. DB सांवत्सरिकं for सांवत्सरिक-. DC, DD insert तदा after -श्राद्धम्. SP inserts अपि after अशौचान्ते 1-2. DC, DD -मशौचान्तमलमासे कर्तव्य-. 2. DA मलमासि for मलमासे DC, DD omit अपि DA, SP एवं for एवंपरम्. 4. AS प्रतिपाद्यते. 6. For the first इति DA reads इत्यादि कदाचनेति and DE has इत्यत्र कदाचनेति AS अपि for सति. 7. DA नान्यत्रेव, DC, DD न त्वन्येत्येव for नान्येत्येव. DC, DD insert च after अन्यथाशौचान्ते DA द्रव्यादिसंपत्ति-. AS पक्षिण्यशौचे च. 8-9. DC -निर्वाहकस्य सर्व-. 9. VSP omits च. After औचित्यात् SP inserts : सपिण्डीकरणे चाधिमासे दोषो नास्तीत्यर्थः. 9-10. DB -पाते उत्तरे मासि, DC, DD -पाते तु तदुत्तरे मासि, VSP -पातेऽपि उत्तरमासि. 10. VSP शुद्धिः प्रथम-. VSP -संभवे निरव-. DE omits प्रतिप्रसवविषयतया. DC omits -विषय-. VSP -विषयतया करणे. SP omits -करणे.

इत्यस्य तद्विषयत्वस्यौचित्यात्। तदेवमपाटवाशौचादिना पतितं सांवत्सरिक-
श्राद्धमशौचान्ते मलमासे न कार्यं किंतु मलमासाव्यापककृष्णैकादश्यामेवेति
केषांचिन्मतं चिन्त्यमेवेति। यत्तु

दशहरादिष्वनुत्कर्षश्चतुर्ष्वपि युगादिषु।
5　　उपाकर्मणि चोत्सर्गे तत्कर्तव्यं वृषादितः॥

इति गृह्यपरिशिष्टनाम्ना वचनं पठित्वा जीमूतवाहनेनोपाकर्मादि वक्ष्यमाणं सौर
एव कार्यमित्युक्तं (कालविवेक, पृः १४४-५; २७७-८, ३६२-४) तदनाकरम्।
मलमासस्य ज्यैष्ठादिपदवाच्यत्वाभावेन तत्र दशहरादीनामसंभवात्, अष्टकानां
पौर्णमास्यन्तमासेनैव समूलैर्बहुभिर्वचनैर्विधानात्, उपाकर्मणोऽपि

10　　संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये

इत्यादिवचनेन चान्द्र एव विधानात्, युग्मादितिथीनामपि ब्रह्मपुराणे चान्द्र एव

1. DA तद्विषयत्वस्यैवौचित्यात्, DB, SP, VSP तद्विषयत्वौचित्यात्, DC, DD, AS तद्विषयस्यौचित्यात्, DE दोषाभावस्यौचित्यात् for तद्विषयत्वस्यौचित्यात्. DC तदेव सपाटवा-. SP -पाटवाद्यशौचा-. 1-2. DB सांवत्सरिकं श्राद्ध-. 2. DA inserts एकादश्यादिम् after सांवत्सरिकश्राद्धम्. DA inserts च after मलमासे. DC, DD, DE कर्तव्यं for कार्यं. 3. SP केनचिदुक्तं for केषांचिन्मतं. DB, DC, DD, DE, SP, VSP insert तत् before चिन्त्यम्. After चिन्त्यमेवेति DA, DE, VSP insert the words from यज्ञदानव्रतानि (on p. 42, line 5) to इति (on p. 43, line 11). 4. DB च for अपि. 6. DA omits वचनं. After जीमूतवाहनेन DA inserts आदिशब्दादष्टका. 6-7. Instead of the words from उपाकर्मादि to कार्यम्, DC, DD, VSP read: दशहराजन्मतिथ्यष्टकादयः सौर एव कार्या, AS उपाकर्मादि सौर एव मासि कार्यम्, and SP 'दशहरातिथ्यष्टकादयः सौर एव कार्येति। उपाकर्मणि वक्ष्यमाणे सौरकार्ये'. 8. DA -पर- for -पद-. VSP -वाच्यताऽभावेन. AS दशहराऽसंभवात्. DB, AS, SP अष्टकादीनां. 10. DA संप्राप्तौ पौर्णमास्या दिनोदये for the whole line. 11. VSP युगादि- for युग्मादि-.

व्यवस्थापितत्वात्, जन्मतिथीनामपि सौरे कदाचिदप्राप्तौ लोपापत्तेश्चान्द्र एव व्यवस्थाया औचित्यात्,

उत्कर्षः कालवृद्धौ स्याडुपाकर्मादिकर्मणाम्,

तथा

उपाकर्म तथोत्सर्गः प्रसवाहोऽष्टकादयः । 5
मानवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम् ॥

इति वचनविरोधाच्च । अत्र पैतृकं सपिण्डीकरणम्, तस्यैव मलमासे विधानात् । तथा

भीष्मश्राद्धमुपाविधिर्दशहरा चैत्रस्य या पूर्णिमा
जन्माहः सुखरात्रिका दमनकं भाद्रे चतुर्थ्यष्टमी ।
पित्रोः श्राद्धदिनं युगादितिथयः पुष्याभिषेकस्तथा 10
माघे सूर्यदिनं निशाचरतिथिर्नोत्कर्षमेतल्लभेत् ॥

इति ऋषिनामशून्यं पठन्ति, तदपि निर्मूलमेव । तदेवं वैशाखादिविहितं कर्म दर्शान्तेष्वेव वैशाखादिषु कार्यम् । मलमासस्य तथात्वाभावेऽपि विशेषवचनात्तत्र सपिण्डीकरणादि कार्यम् । एवं पौर्णमास्यन्तादावपि तत्तत्तिथिविशेषोल्लेखविहितं

1. DB transposes सौरे and कदाचित्. DC, DD -चिदसंप्राप्तौ. 1-2. SP -श्चान्द्रव्यवस्थाया- (dropping एव ?). 7. DE omits वचन-. DA inserts तु after अत्र. DC, DD मलमासविधानात्. DC, DD यथा for तथा. 8. DA, DC -श्राद्धमुपाधि-, DD -श्राद्धमुपाकृति- for -श्राद्धमुपाविधि-. 9. AS मदनकं for दमनकं. VSP चान्द्रे for भाद्रे. 10. For पुष्याभिषेकस्तथा DB reads only पुष्या with a blank space after it. 11. AS omits लभेत् haplologically. 12. DE omits कर्म. 13. VSP वैशाखेषु. DA मलमासे for मलमासस्य. SP, VSP omit अपि. AS तु for तत्र. DC, DD insert अपि after तत्र. 14. DC, DD सपिण्डीकरणादिकं, SP सपिण्डीकरणं for सपिण्डीकरणादि. DC, DD, VSP तत्र तिथि-, DE तत्र for तत्तत्तिथि-. AS repeats -विशेष-. DB -विशेषोल्लेखेन विहितं.

युगाद्यादियावत्तिथिकृत्यं कार्यम्। अत्र सांवत्सरिकस्य मासविशेषाङ्किततिथि-
विशेषोल्लेखेन विहितत्वात्तदपि कार्यमिति कश्चित्। तन्न।

चक्रवत् परिवर्तेत सूर्यः कालवशाद् यतः
अतः सांवत्सरं श्राद्धं कर्तव्यं मासचिह्नितम्॥

5 इत्यभिधाय

मासचिह्नं तु कर्तव्यं पौषमाघाद्यमेव हि

इति लघुहारीतवचने पौषमाघादिचिह्नितमासेष्वेव सांवत्सरिकस्योक्तत्वात्। तथा
पितामहः

आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः।
10 विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः॥

"विवाहादौ" इत्यादिपदेन चूडादीनां ग्रहणम्। यथा

चूडा माघादिषट्के

इत्यादि। "यज्ञादौ" इत्यादिपदं प्रायश्चित्तायुर्दायाशौचपुंसवनादिमाससंवत्सरो-
ल्लेखविहितकर्मपरम्। अतएव गार्ग्यः

1. DA यावत्तिथिकृत्यं, DB युगादिवत्तिथिकृत्यं, DC, DD युगाद्यादिविहितं यावत्तिथि-
कृत्यं, DE युगादिविहितं यावत्तिथिकृत्यं for युगाद्यादियावत्तिथिकृत्यं DD तत्र for अत्र
SP -विशेषानङ्कित- . न being inserted marginally). 2. DA अपि for इति.
DA तदपि न for तन्न. 4. VSP संवत्सरं. 7. AS पौषमाघाद्यमासेष्वेव. 10. DA
सौरो मासो विवाहादौ for विवाहादौ स्मृतः सौरो DA inserts इति after मतः.
11. DA विवाहादिः for विवाहादौ. DA चूडाकरणादीनां. DA, SP तथा for यथा;
DC, DD omit यथा. 13. DA, DB omit -मास-. DA -सांवत्सरो-, AP, SP
-संवत्सरविशेषो- for -संवत्सरो-.

आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा ।
सावनेन तु कर्तव्या मन्त्राणां चाप्युपासना ॥

तथा सूर्यसिद्धान्तः ( १४.१६ )

सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा ।
मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्तिता ॥ 5

इति । पुंसवनादिसंस्काराश्च

पुरा स्पन्दते इति मासे द्वितीये तृतीये वा
( पारस्करगृह्यसूत्र १.१४.२ ),

तथा

षष्ठेऽष्टमे वा सीमन्तः ( याज्ञवल्क्यस्मृति १.११ ), 10

तथा

षष्ठेऽन्नप्राशनं मासि
( याज्ञवल्क्यस्मृति १.१२ ; मनुस्मृति २.३४ ),

तथा

सांवत्सरिकस्य चूडाकरणं तृतीये वा 15
( पारस्करगृह्यसूत्र २.१.१-२ ),

1. DA (before correction), DB -क्रियास्तथा. 2. AS सावने तु. DB, VSP omit च. 3. SP -सिद्धान्ते. 4. DA -परिच्छेदे दिन-. DA, DE, AS -मासादयस्तथा [ For the reading -मासाब्दपास्तथा see Sūrya-siddhānta 14.19, Śd-k, p. 240, St I, pp. 119, 747, 775 and 908, and so on. ] 6. DB, VSP omit इति. DA -संस्कारेषु च, VSP -संस्कारश्च. AS omits च. 7. DB सवनं स्पन्दनात् पुरा, and AS, SP स्पन्दनात् पुरा for पुरा स्पन्दते. [ The Pāraskara-gṛhyasūtra reads स्यन्दते for स्पन्दते. ] DB मास- for मासे. 11. DB omits तथा. 14. DC, DD DE, AS, VSP omit तथा. 15. DB संवत्सरे चूडा-. AS inserts मध्ये after सांवत्सरिकस्य, and अब्दे after तृतीये.

तथा

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्

( याज्ञवल्क्यस्मृति १.१४ ) इत्यादौ । अत्र

अहन्येकादशे नाम ( याज्ञवल्क्यस्मृति १.१२ )

5 इत्यत्र नामकरणे सावनप्रतीतेरेकत्र निर्णीतः शास्त्रार्थ इति न्यायादाचाराच्च सावन-
मासस्यैव ग्रहणम् । तथा विष्णुधर्मोत्तरे ( १.७२.२६ )

अध्वायनं च ग्रहचारकर्म
सौरेण मानेन सदाध्यवस्येत् ।
सत्राण्युपास्यान्यथ सावनेन
10 लौक्यं च यत् स्याद्व्यवहारकर्म ॥

इति । अध्वायनं यात्रा । तत्र

मार्गशीर्षे शुभे मासि यायाद् यात्रां महीपतिः

इत्यादौ सौरमार्गादिग्रहणम् । ग्रहचारकर्मेति ग्रहचारे गोचरदशापाकादौ प्रतिकूल-
ग्रहचारे यत्कर्म शान्तिकं ग्रहयागादि । सत्राणि गवामयनादीनि । लौक्यं

2. DA, DB, DC ब्राह्मणस्योपनयनम्; the syllable between प and य, dropped in AS. 5. DE अत्र for एकत्र. AS omits नामकरणे. DB, DC, DD, AS, SP, VSP omit शास्त्रार्थः. 8. DB सदाध्वरस्य for सदाध्यवस्येत्. 10. DB लोक्यं for लौक्यं. 11. VSP omits इति. 12. DB यां यां, DC या या for यायात्. 13. DB सौरमार्गशीर्षादिग्रहणं, VSP सौरमार्गग्रहणं. DA omits ग्रहचार-कर्मेति. VSP omits ग्रहचारे. DB ग्रहचारगोचराष्टवर्गादौ, DC, DD ग्रहचारे गोचराष्टवर्गकादौ and SP ग्रहगोचराष्टवर्गादौ for ग्रहचारे गोचरदशापाकादो. 14. VSP -ग्रहचारैः for -ग्रहचारे. DE शान्तिकग्रह-. DB लोक्यं for लौक्यं.

भृतिवृद्धयादि । मासेन यास्यसि मासेनागमिष्यसीत्यादौ लौकिकप्रेष्यश्च । एवमन्यत्रापि विशेषविधिदर्शनान्मासव्यवस्थोहनीयेति ॥

## अथ संक्रान्तिनिर्णयः ॥

तत्र ज्योतिःशास्त्रम्

अयने द्वे विषुवे द्वे चतस्रः षडशीतयः । 5
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥

द्वादशेत्यधिमासपातेऽपि न त्रयोदशेत्यर्थः । तथा

मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषे गोलमध्ये तथापराः ॥

मृगो मकरः । गोलो राशिचक्रम् । व्यक्तमाह तत्रैव 10

धनुर्मिथुनकन्यासु मीने च षडशीतयः ।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी तथा ॥

1. DB भृतिकर्मादि, DE, VSP भूतिवृद्धयादि for भृतिवृद्धयादि DB यास्यति for यास्यसि. DB आगमिष्यति, VSP गमिष्यसि for आगमिष्यसि. DC, DD इत्यादि for इत्यादौ. DC, DD लौकिकः प्रैष्यश्च, DE लौकिकप्रैषश्च, AS लौकिकप्रेष्ये, SP लौकिक-प्रैष्यश्च, VSP लौकिः प्रैष्यः for लौकिकप्रेष्यश्च. 2. AS -दर्शनान्मासस्य व्यवस्थो-. 3. DC -कृत्यम् for -निर्णयः. 4. DE अत्र for तत्र. 7. DE द्वादशेति त्रयोदशमासपातेऽपि त्रयोदशेनेत्यर्थः. DC, DD, DE omit तथा. 9. DA transposes विषुवती and तुलामेषे 12. SP -सिंहेषु कुम्भे for -कुम्भेषु सिंहे. DB, DE, AS, SP स्मृता for तथा. [ The reading तथा is found in Kv, p. 381 and Vk, p. 204. ]

अत्र च संक्रान्तेरतिसूक्ष्मकालत्वात्तत्र कर्मानुष्ठानं न संभवति। तदुक्तं

सुस्थे नरे सुखासीने यावत् स्पन्दति लोचनम्।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः॥
तत्पराच्छतशो भागस्त्रुटिरित्यभिधीयते।
5 त्रुटेः सहस्रभागो यः स कालो रविसंक्रमे॥

(देवीपुराण २४.२२-२३) इति। अतः पूर्वापरस्थूलकालानामेव पुण्यत्वमित्याह देवीपुराणे (२४.१३)

यावद्विंशकला भुक्तास्तत्पुण्यं चोत्तरायणे।
निरंशे भास्करे दृष्टे दिनान्तं दक्षिणायने॥

10 अस्यार्थः—संक्रान्तिक्षणे भास्करोंऽशकशून्यो भवतीति निरंशः संक्रान्तिक्षणस्तस्मिन्, भास्करे भास्करोपलक्षिते दिवेति यावत्, दृष्टे गणितशास्त्रतो ज्ञाते, यावद्विंशतिदण्डा भुक्ताः संक्रान्त्यनन्तरं भवन्ति तावत्पुण्यकाल उत्तरायणसंक्रान्तौ। एवं दक्षिणायने

1. AS omits च. DC, DE, AS, SP, VSP -सूक्ष्मतम- for -सूक्ष्म-. VSP inserts इति after संभवति. 2. AS समासीने for सुखासीने. 3-4. VSP haplologically omits all words from तत्परः to शतशो भागः. 4. DE तत्परः सप्तमो भाग-, AS तत्पराच्छतमो भाग-. 5. DB, DC, DD, AS, SP -संक्रमः for -संक्रमे. [For the reading रविसंक्रमे see Devī-purāṇa 24.23 and Vk, p. 205.] 6. DB, DC, DD, SP omit इति before अतः. 8. DA यावत्त्रिंशत् for यावद्विंश-. [For the reading यावद्विंश- see Devī-purāṇa 24. 13, Vk, p. 205, St I, p. 140, and so on.] 9. DE inserts इति after दक्षिणायने. 10. DB संक्रान्तिलक्षणे. DB, DC, DD, AS, SP भास्करोंऽशशून्यो. VSP निरंशकः for निरंशः. SP inserts एव after तस्मिन्. 11. AS, SP omit भास्करे. SP भास्करस्योपलक्षिते for भास्करोपलक्षिते. DC, DD, DE, SP, VSP यावद्विंशतिर्दण्डा-. 12. DC, DD पुण्यकालम्, DE प्राप्यकालः, AS कालः for पुण्यकालः. AS दक्षिणायनसंक्रान्तौ for दक्षिणायने.

दिवा ज्ञाते संक्रान्तिप्राक्कालीनं दिनान्तम्, तत्पर्यन्तं पुण्यकालस्त्रिंशद्दण्डा इत्यर्थः।

त्रिंशन्नाडिका दिनमानम्

इति ज्योतिर्विदः। एतच्चानागतातीतदण्डानां पुण्यत्वं तत्रैवोक्तम्। यथा

षडशीतिमुखेऽतीते वृत्ते च विषुवद्वये।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे॥ 5
(देवीपुराण २४.१६)

उत्तरायणपदोपादानादयने दक्षिणायन इत्यर्थः। अस्मादेव वचनात्

अर्वाक् षोडश विज्ञेया नाड्यः पश्चात्तु षोडश।
कालः पुण्योऽर्कसंक्रान्तेर्विद्वद्भिः परिकीर्तितः॥
संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः। 10
अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः॥
(देवीपुराण २४.७)

1. DD संजाते for ज्ञाते. DE, AS -प्राक्कालीनदिनान्तम्. DA omits दिनान्तम्. AS, VSP omit तत्पर्यन्तं. After इत्यर्थः DC, DD, AS, VSP (marginally within brackets) insert: यद्वा भास्करे निरंशे दृष्टे दिवेति यावत्, and SP inserts यद्वा भास्करे with a blank space after भास्करे. 2. DB दिनम् for दिनमानम्. 3. DA एतच्चागतातीत-, AS एतच्चातीतानागत- for एतच्चानागतातीत-. DB तथा for यथा. 4. DB विषुपद्वये. 5. DB inserts इति after चोत्तरायणे. 7. DB inserts अपि after -दानादयने. SP दक्षिणायनम् for दक्षिणायने 8. DE त्रयोदश for तु षोडश. VSP च for तु. [8-9. The verse अर्वाक् षोडश etc. is the same as Laghu-śatātapa-smṛti, verse 146.] 9. DA, DD, DE, SP insert इति after परिकीर्तितः. 10. AS inserts तथा before संक्रान्तेः. DC कालाः for कलाः. DC, SP, VSP insert इति after कलाः. 11. DA, DE, AS, SP अतीतानागतो भागो, DB अतीतानागते भोगो, DC, DD अतीतानागता भागो. [The reading भोगो is found in Vk, p. 207 and St I, pp. 142 and 150 and II, p. 5. In the Devī-purāṇa the line reads अतीतानागता भोगा नाड्यः etc.]

इति शातातपजाबालदेवीपुराणवचनैर्यदुभयतोवर्तिकालानां पुण्यत्वमुक्तं तत्षडशीत्या-
दिष्ववकाशमलभमानं दिवा विष्णुपद्यां बोद्धव्यम्। दिवा विषुवषडशीतिसंक्रमणे
तु मानार्धमेव पञ्चदश दण्डाः पुण्यकालः। तदुक्तं

मानार्धं भास्करे पुण्यमपूर्णे शर्वरीदले।
5 संपूर्णे चार्धरात्रे च उदयेऽस्तमयेऽपि वा ॥
अर्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतम्।
संपूर्णे तूभयोर्ज्ञेयमतिरेके परेऽहनि ॥

( देवीपुराण २४.१४-१५ ) इति। भास्करे तदुपलक्षिते दिवेति यावत्। एतच्च
पारिशेष्याद्दिवाविषुवद्वयषडशीतिविषयम्। अपूर्णे शर्वरीदलेऽर्धरात्रात्पूर्वं संक्रमणेषु
10 द्वादशस्वेव मानार्धं पुण्यमित्यनुषज्यते। तथा, संपूर्णेऽर्धरात्रे संक्रमणेषूदये चास्तमये
च मानार्धं पुण्यम्। तच्च पूर्वदिनपरदिनयोरेव सांनिध्यात्,

संपूर्णे तूभयोर्ज्ञेयम् ( देवीपुराण २४.१५ )

1. AS वचनैर्यदुभयवर्ति-. DC, DD, DE -कलानां for -कालानां. DA inserts इति after पुण्यत्वम्. 2. SP विष्णुपदीसंक्रान्तिविषयं for विष्णुपद्यां. DB विषुप- for विषुव-. 3. VSP पञ्च for पञ्चदश. DB, SP पुण्यकालाः for पुण्यकालः. After पुण्यकालः DC, DD insert : तत्त्रिंशद्दण्डा दिनमानमिति ज्योतिःशास्त्रवचनात्. 4. DE मानार्धे भा-. 5. SP च for वा. 8. DB, DC, DD तदुपलक्षितदिवेति 9. DB -विषुप- for -विषुव-. DE omits -द्वय-. AS -रात्रात्पूर्वसंक्रमणेषु. 10. DA inserts दिवा after द्वादशस्वेव. DC अनुमज्यति for अनुषज्यते. DA inserts तु after संपूर्णे. VSP omits च preceding अस्तमये. DA अस्तसमये, VSP अस्तमये for चास्तमये. 11. DB, AS एतच्च for तच्च. SP पूर्वपरदिन-, VSP परदिनपूर्वदिन- for पूर्वदिनपरदिन-. AS omits all words from तच्च पूर्वदिन- to वक्ष्यमाणवचनाच्च (on p. 59, line 1).

